॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तस्येदम्

## अजन्तपुल्लिङ्गप्रकरणम्

अजन्तपुल्लिँङ्गस्य यू-ट्यूब वीडियोज् लिंक्स्

कृपया अत्र स्पर्शं करोतु







तस्य डिजिटल्-संस्करणम् प्रस्तूयते


परामर्शकौ

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

प्रस्तोता

डॉ. श्रीओमशर्मा

# निवेदनम्



यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेविका संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें।

अस्माकं सम्पर्कसूत्राणि—

 e-mail अणुवाक्—: samskritsaarah@gmail.com

 ह्वाट्सैप्— ८८९९१८७९२९ (भवतां परामर्शानां स्वागतम्)



— संस्कृतसारः @sanskrit sar

 FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

दिनाङ्कः-

12.01.2023

निवेदकः-

संस्कृतशिक्षा-परिवारः
(सम्पर्कसूत्रम्-9424692199)
sanskritshiksha2020@gmail.com

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पुंल्लिङ्गे अजन्ताः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

### अ
१.राम
२.सर्व
३.निर्जर

### आ
१.विश्वपा
२.हाहा

### इ
१.हरि
२.सखि
३.पति
४.भूपति
५.कति
६.त्रि
७.प्रियत्रि
८.द्वि

### ई
१.पपी
२.बहुश्रेयसी
३.प्रधी
४.नी
५.सुश्री
६.शुद्धधी
७.सुधी
८.सुखी

### उ
१.शम्भु
२.क्रोष्टु

### ऊ
१.हूहू
२.अतिचमू
३.खलपू
४.स्वयंभू
५.वर्षाभू
६.दृन्भू

### ऋ
१.धातृ
२.पितृ
३.नृ

### ओ
१.गो

### ऐ
१.रै

### औ
१.ग्लौ

# प्रातिपदिकसञ्ज्ञा-१



- ❖ सूत्रम्- अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥ (सूत्रच्छेदः- अर्थवद् अधातुः अप्रत्ययः प्रातिपदिकम्)
- ❖ सूत्रार्थः- धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥

**अर्थवत्-शब्दस्वरूपम्**

- **धातुः** भू, गम्, एध्, पठ् इत्यादिभिन्नम्।
- **प्रत्ययः** सुँ, औ, जस्, तिप्, सिप् इत्यादिभिन्नम्।
- **प्रत्ययान्तः** हरिषु, करोषि इत्यादिभिन्नम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रातिपदिकसञ्ज्ञा-२

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुँल्लिङ्गाः)

- सूत्रम्- **कृत्तद्धितसमासाश्च॥** (सूत्रच्छेदः- कृत् तद्धित समासाः च)
- सूत्रार्थः- **कृत्तद्धितान्तौ समासाश्च तथा स्युः॥**

अर्थवत्-शब्दस्वरूपम्

- **कृदन्तः** राम, पठितव्य, हारक,गत इत्यादयः।
- **तद्धितान्तः** दैत्य, शैव,राष्ट्रिय,पाणिनीय इत्यादयः।
- **समासः** राजपुरुषः (राजन् अस् पुरुष स्) इत्यादयः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# स्वादि-एकविंशति-प्रत्ययाः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

❖ सूत्रम्- स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्॥

❖ सूत्रार्थः- सुँ औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसिँ भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी॥ (एते प्रत्ययाः स्युः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुँ (स्) | औ | जस् (अस्) |
| द्वितीया | अम् | औट् (औ) | शस् (अस्) |
| तृतीया | टा (आ) | भ्याम् | भिस् |
| चतुर्थी | ङे (ए) | भ्याम् | भ्यस् |
| पञ्चमी | ङसिँ (अस्) | भ्याम् | भ्यस् |
| षष्ठी | ङस् (अस्) | ओस् | आम् |
| सप्तमी | ङि (इ) | ओस् | सुप् (सु) |

- अजादिविभक्तिः
- हलादिविभक्तिः
- ङित्-विभक्तिः
- सर्वनामस्थान-संज्ञकविभक्तिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः



# स्वादीनां विधानम्

❖ सूत्रम्- ङ्याप्प्रातिपदिकात्॥ (४,१.१) (पञ्चमाध्यायस्य समाप्तिपर्यन्तम्)

प्रत्ययः॥ (३,१.१) (पञ्चमाध्यायस्य समाप्तिपर्यन्तम्)

परश्च॥ (३,१.२) (पञ्चमाध्यायस्य समाप्तिपर्यन्तम्)

❖ सूत्रार्थः- इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः (प्रत्ययसंज्ञकाः) स्युः॥

- ङ्यन्तात्---- ङी+ अन्तात् (ङीप्,ङीष्,ङीन्) कुमारी गौरी नारी.........।
- आबन्तात्----- आप् + अन्तात् ( टाप्, चाप् , डाप्) अजा, सूर्या, सीमा.........।
- प्रातिपदिकात्---- राम ,सर्व, वाक्, अनडुह्....... ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# एकवचन-द्विवचन-बहुवचनसञ्ज्ञा

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- सूत्रम्- सुँपः ॥ (१,४.१०३)
- सूत्रार्थः- सुँपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचनसञ्ज्ञानि स्युः॥
- सूत्रम्- द्व्येकयोर्द्विवचनैकवचने॥ (१,४.२२)
- सूत्रार्थः- द्वित्वैकत्वयोरेते स्तः॥

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुँ (स्) | औ | जस् (अस्) |
| द्वितीया | अम् | औट् (औ) | शस् (अस्) |
| तृतीया | टा (आ) | भ्याम् | भिस् |
| चतुर्थी | ङे (ए) | भ्याम् | भ्यस् |
| पञ्चमी | ङसिँ (अस्) | भ्याम् | भ्यस् |
| षष्ठी | ङस् (अस्) | ओस् | आम् |
| सप्तमी | ङि (इ) | ओस् | सुप् (सु) |

- अजादिविभक्तिः
- हलादिविभक्तिः
- ङित्-विभक्तिः
- सर्वनामस्थान-संज्ञकविभक्तिः

# अवसानसञ्ज्ञा



❖ सूत्रम्- विरामोऽवसानम्॥ (१,४.११०)

❖ सूत्रार्थः- वर्णानामभावोऽवसानसंज्ञः स्यात्।

रुँत्व-विसर्गौ। रामः॥

| | |
|---|---|
| राम | (प्रातिपदिकसञ्ज्ञा) |
| राम + स् | (स-सजुषो रुँः) |
| राम + र् | (अवसानसञ्ज्ञा) |
| राम + र् | (पदसञ्ज्ञा) |
| रामः | (खरवसानयोर्विसर्जनीयः) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# एकशोषविधानम्



- सूत्रम्- सरूपाणामेकशेष एकविभक्तौ॥ (१,२.६४)
- सूत्रार्थः- एकविभक्तौ = यावत्विभक्तिविषये यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥
- सरलार्थः- सरूपाणां शब्दानां यदि सर्वासु एकविंशति-विभक्तिषु समानमेव रूपं दृष्टश्चेत् तदा तेषां विभक्त्युत्पत्तेः पूर्वम् एकशेषो भवति।

## अस्य सूत्रस्य आरम्भः किमर्थः?

'प्रत्यर्थं शब्दाभिनिवेशः' इति शिष्टोक्त्या प्रत्येकस्य अर्थस्य कृते पृथक्शब्दस्य प्रयोगो लोके दृश्यते। अतः द्वित्व-बहुत्वविवक्षायां शब्दस्य द्वि-बहूच्चारणं प्राप्तं भवति। तत्रेदं सूत्रं नियमयति यत्– तेषाम् एक एव शिष्येत।
(यः शिष्यते स लुप्यमानार्थाभिधायी)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रामौ इति सिद्धिः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

❖ सूत्रम्- प्रथमयोः पूर्वसवर्णः॥ (६,१.१०२)

❖ सूत्रार्थः- अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥

राम राम

राम (एकशेषः)

राम + औ (वृद्धिः प्राप्ता)

राम + औ (पूर्वसवर्णदीर्घप्राप्तः)

रामौ (नादिचि)

अक्

| प्रथमा | सुँ (स्) | औ | जस् (अस्) |
|---|---|---|---|
| द्वितीया | अम् | औट् (औ) | शस् (अस्) |

पूर्वसवर्णदीर्घः

अ इ उ ऋ

आ ई ऊ ॠ

❖ सूत्रम्- नादिचि॥ (६,१.१०४)

❖ सूत्रार्थः- आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ॥

अवर्ण

इ उ ऋ ऌ ए ओ ऐ औ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रामाः इति सिद्धिः

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- सूत्रम्- बहुषु बहुवचनम्॥ (१,४.२१)
- सूत्रार्थः- बहुत्वविवक्षायां बहुवचनं स्यात्॥
- सूत्रम्- चुटू॥ (१,३.७)
- सूत्रार्थः- प्रत्ययाद्यौ चुटू=चवर्ग-टवर्गौ इतौ स्तः॥
- सूत्रम्- विभक्तिश्च॥ (१,४.१०४)
- सूत्रार्थः- सुँप्तिङौ विभक्तिसंज्ञौ स्तः॥
- सूत्रम्- न विभक्तौ तुस्माः॥ (१,३.४)
- सूत्रार्थः- विभक्तिस्थास्तवर्गसमा नेतः। इति सस्य नेत्त्वम्। रामाः॥

राम राम राम राम......

राम (एकशेषः)

राम + जस् (चुटू-जकारः इत्,लोपः)

राम + अस् सवर्णदीर्घः,पररूपं प्राप्तम्(पूर्वसवर्णदीर्घः)

रामास् (न विभक्तौ तुस्माः-सकारस्य इत्-निषेधः)

रामाः (रुत्वविसर्गौ)

| | | |
|---|---|---|
| सुँ (स्) | औ | जस् (अस्) |
| अम् | औट् (औ) | शस् (अस्) |
| टा (आ) | भ्याम् | भिस् |
| ङे (ए) | भ्याम् | भ्यस् |
| ङसिँ (अस्) | भ्याम् | भ्यस् |
| ङस् (अस्) | ओस् | आम् |
| ङि (इ) | ओस् | सुप् (सु) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सम्बोधनस्य रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

- सूत्रम्- एकवचनं सम्बुद्धिः॥
- सूत्रार्थः- सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥
- सूत्रम्- यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्॥
- सूत्रार्थः- यः प्रत्ययो यस्मात्= प्रकृतेः क्रियते= विधीयते तदादि= तत्= प्रकृतिरूपम् आदिर्यस्य शब्दस्वरूपं तस्मिन्= प्रत्यये परे अङ्गं= अङ्गसंज्ञं स्यात्॥
- सूत्रम्- एङ्ह्रस्वात्सम्बुद्धेः॥
- सूत्रार्थः- एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम!, हे रामौ! हे रामाः!॥

| प्रथमा | सुँ(स्) | औ | जस्(अस्) |
|---|---|---|---|

भू — प्रकृतिः/ अङ्गम्
मि — प्रत्ययः

अङ्गम्

भू — प्रकृतिः
अ — विकरणम्
मि — प्रत्ययः

एए/ओ अन्तं ह्रस्वान्तम् अङ्गम्

सम्बुद्धेः हल् लोपः

राम (प्रातिपदिकसञ्ज्ञा)
हे राम + स् (अङ्गसञ्ज्ञा)
हे! राम!

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वितीयाविभक्तेः रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- सूत्रम्- अमि पूर्वः॥ (६,१.१०७)
- सूत्रार्थः- अकोऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ॥
- सूत्रम्- लशक्वतद्धिते॥ (१,३.८)
- सूत्रार्थः- तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥
- सूत्रम्- तस्माच्छसो नः पुंसि॥ (६,१.१०३)
- सूत्रार्थः- पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि॥

राम + अम् (अमि पूर्वः)
रामम्

राम + औट् (वृद्धिरेचि)
रामौ

राम + शस् (तस्माच्छसो नः पुंसि)
राम + अस् (पूर्वसवर्णदीर्घः)
रामास्
रामान्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तृतीयाविभक्तेः रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम् (अजन्तपुँल्लिङ्गाः)

❖ सूत्रम्- टाङसिँङसामिनात्स्याः॥ (७,१.१२)

❖ सूत्रार्थः- अदन्ताट्टादीनामिनादयः स्युः। णत्वम्। रामेण॥

❖ सूत्रम्- सुँपि च॥ (७,३.१०२)

❖ सूत्रार्थः- यञादौ सुँपि अतोऽङ्गस्य दीर्घः। रामाभ्याम्॥

❖ सूत्रम्- अतो भिस ऐस्॥ (७,१.९)

❖ सूत्रार्थः- (अदन्ताद् अङ्गात् परस्य भिस ऐस् स्यात्) अनेकाल्शित्सर्वस्य। रामैः॥

राम + टा (चुटू)
राम + आ (टाङसिँङसामिनात्स्याः)
राम + इन (आद्गुणः)
रामेन (अट्कुप्वाङ्नुम्व्यवायेऽपि)
रामेण

राम + भ्याम् (सुँपि च)
रामाभ्याम्

राम + भिस् (अतो भिस ऐस्)
राम + ऐस्
रामैः



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# चतुर्थीविभक्तेः रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- सूत्रम्- ङेर्यः॥ (७,१.१३)
- सूत्रार्थः- अतोऽङ्गात्परस्य ङेर्यादेशः॥
- सूत्रम्- स्थानिवदादेशोऽनल्विधौ॥ (पदच्छेदः- स्थानिवत् आदेशः अनल्विधौ)
- सूत्रार्थः- आदेशः स्थानिवत्= स्थानिधर्मकः स्यात्, न तु स्थान्यलाश्रयविधौ= अलाश्रितकार्ये कर्तव्ये (धर्मानयने) स्थानिवद्भावो न भवति। इति स्थानिवत्त्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥
- सूत्रम्- बहुवचने झल्येत्॥
- सूत्रार्थः- झलादौ बहुवचने सुप्यतो ऽङ्गस्यैकारः। रामेभ्यः। सुपि किम्? पचध्वम्॥

राम + ङे (लशक्वतद्धिते) → सुप्त्वम्

राम + ए — यस्य स्थाने किञ्चित् विधीयते तत् स्थानि।

राम + य — येन च विहितेन किञ्चित् निवर्त्तते स आदेशः।

रामाय (सुँपि च)

राम + भ्यस्

रामे + भ्यस् (बहुवचने झल्येत्)

रामेभ्यः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्तेषु पञ्चमी-षष्ठी-विभक्तेः रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- सूत्रम्- वाऽवसाने॥ (८,४.५६)
- सूत्रार्थः- अवसाने झलां चरो वा। रामात्, रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥
- सूत्रम्- ओसि च॥ (७,३.१०४)
- सूत्रार्थः- अतोऽङ्गस्यैकारः। रामयोः॥
- सूत्रम्- ह्रस्वनद्यापो नुँट्॥ (७,१.५४)
- सूत्रार्थः- ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुँडागमः॥
- सूत्रम्- नामि॥ (६,४.३)
- सूत्रार्थः- अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामे। रामयोः। सुपि - एत्वे कृते॥

| | |
|---|---|
| राम + ङसिँ | (लशक्वतद्धिते) |
| राम + अस् | (टाङसिँङसामिनात्स्याः) |
| राम + आत् | (अकः सवर्णे दीर्घः) |
| रामात् | (झलां जशोऽन्ते) |
| रामाद् | (वाऽवसाने) |
| रामात् | |

| | |
|---|---|
| राम + ङस् | राम + ओस् |
| राम + अस् | रामे + ओस् |
| राम + स्य | राम् अय् + ओस् |
| रामस्य | रामयोः |

राम + आम्
राम + नुँट् आम् (ह्रस्वनद्यापो नुँट्)
राम + नाम् (नामि) (णत्वम्)
रामाणाम्

1.ह्रस्वान्तात्
2.नद्यन्तात्
3.आबन्तात्

नुँट्

आम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्तेषु सप्तमीविभक्तेः रूपसिद्धिः

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

- ❖ रामे। रामयोः। सुपि - एत्त्वे कृते॥
- ❖ सूत्रम्- आदेशप्रत्यययोः॥ (८,३.५९)
- ❖ सूत्रार्थः- इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥

| | |
|---|---|
| राम + ङि | (लशक्वतद्धिते) |
| राम + इ | (आद्गुणः) |
| रामे | |
| राम + ओस् | (ओसि च) |
| रामे + ओस् | (एचोऽयवायावः) |
| राम् अय् + ओस् | (रुँत्वविसर्गौ) |
| रामयोः | |
| राम + सुप् | (हलन्त्यम्,तस्य लोपः) |
| रामे + सु | (बहुवचने झल्येत्) |
| रामेसु | (आदेशप्रत्यययोः) |
| रामेषु | |

1.इण्- इ उ ऋ लृ ए ओ ऐ औ ह य व र ल
2.कवर्गः- क ख ग घ ङ




अपदान्तस्य-आदेशस्य

प्रत्यय-अवयवः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अजन्तपुल्लिङ्गे संज्ञासूत्राणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

(प्रातिपदिकसंज्ञा)

1.अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

2. कृत्तद्धितसमासाश्च

(प्रत्ययसंज्ञा)

1.प्रत्ययः

(एकवचन-द्विवचन-बहुवचनसंज्ञा)

1.सुपः

(अवसानसंज्ञा)

1. विरामोऽवसानम्

(इत्संज्ञा)

1. चुटू

2. लशक्वतद्धिते

3. न विभक्तौ तुस्माः

(विभक्तिसंज्ञा)

1. विभक्तिश्च

(संबुद्धिसंज्ञा)

1. एकवचनं सम्बुद्धिः

(अङ्गसंज्ञा)

1. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अजन्तपुल्लिङ्गे सन्धिकार्याणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

(पूर्वसवर्णः)
1.प्रथमयोः पूर्वसवर्णः
2. नादिचि

(पूर्वरूपम्)
1.अमि पूर्वः

(नत्वम्)
1.तस्माच्छसो नः पुंसि

(णत्वम्)
1.अट्कुप्वाङ्नुम्व्यवायेऽपि
2.पदान्तस्य

(षत्वम्)
1. आदेशप्रत्यययोः

(दीर्घः)
1. सुपि च
2. नामि

(एत्वम्)
1. बहुवचने झल्येत्
2. ओसि च

(चर्त्वसन्धिः)
1. वाऽवसाने

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्तपुल्लिँङ्गे विभक्तिस्थानिका आदेशाः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)



# अथ सर्वादिगणः



❖ सूत्रम्- सर्वादीनि सर्वनामानि ॥ (१,१.२७)

❖ सूत्रार्थः- (सर्वाद्यर्थवाचकानि सर्वादिगणे पठितानि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः) ।

❖ सर्व[1]=सभी All, विश्व[2] = सभी All, उभ[3] = दोनों Both, उभय[4] = दो अवयव वाला, डतर[5] = दो में से एक का निर्धारण, डतम[6] = बहुत में से एक का निर्धारण, अन्य[7] = दूसरा, अन्यतर[8] = दो में से एक, इतर[9] = भिन्न, त्वत्[10] =भिन्न, त्व[11] = भिन्न, नेम[12] = आधा, सम[13] = सभी All, सिम[14] = सभी All, ।

❖ गणसूत्रम्—पूर्व[15] पर[16] अवर[17] दक्षिण[18] उत्तर[19] अपर[20] अधराणि[21] व्यवस्थायामसंज्ञायाम्।

❖ सूत्रार्थः- (पूर्वादीनि सप्त शब्दानि व्यवस्थायाम्-असंज्ञायां च सर्वादिगणे सन्निविष्टानि वेदितव्यानि।)

❖ गणसूत्रम्—स्वम्[22] अज्ञातिधनाख्यायाम्।

❖ सूत्रार्थः- ('स्वम्' इति शब्दो ज्ञातिधनाभ्यां भिन्नार्थे सर्वादिगणे सन्निविष्टं वेदितव्यम्।)

❖ गणसूत्रम्—अन्तरं[23] बहिर्योगोपसंव्यानयोः।

❖ सूत्रार्थः- ('अन्तरम्' इति शब्दो बहिर्योग-उपसंव्यानार्थे च सर्वादिगणे सन्निविष्टं वेदितव्यम्।)

त्यद्[24] तद्[25] यद्[26] एतद्[27] इदम्[28] अदस्[29] एक[30] द्वि[31] युष्मद्[32] अस्मद्[33] भवतु[34] किम्[35] ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सर्वशब्दस्य प्रक्रियायां विशेषः

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

- सूत्रम्- जसः शी॥ (७,१.१७)
- सूत्रार्थः- अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥
- सूत्रम्- सर्वनाम्नः स्मै॥ (७,१.१४)
- सूत्रार्थः- अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै॥
- सूत्रम्- ङसिँङ्योः स्मात्स्मिनौ॥ (७,१.१५)
- सूत्रार्थः- अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्॥
- सूत्रम्- आमि सर्वनाम्नः सुँट्॥ (७,१.५२)
- सूत्रार्थः- अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुँडागमः। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः॥

सर्व + जस्
सर्व + ई
सर्वे

सर्व + ङे
सर्व + स्मै
सर्वस्मै

सर्व + ङसिँ
सर्व + स्मात्
सर्वस्मात्

सर्व + ङि
सर्व + स्मिन्
सर्वस्मिन्

सर्व + आम्
सर्व + सुँट् आम्
सर्व + स् आम्
सर्वे + स् आम्
सर्वेषाम्

# सर्वशब्दस्य प्रक्रियायां विभक्त्यादेश आगमश्च





संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सर्वशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सर्वः | सर्वौ | सर्वे |
| सम्बोधनम् | हे सर्व | हे सर्वौ | हे सर्वे |
| द्वितीया | सर्वम् | सर्वौ | सर्वान् |
| तृतीया | सर्वेण | सर्वाभ्याम् | सर्वैः |
| चतुर्थी | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| पञ्चमी | सर्वस्मात्-द् | सर्वाभ्याम् | सर्वेभ्यः |
| षष्ठी | सर्वस्य | सर्वयोः | सर्वेषाम् |
| सप्तमी | सर्वस्मिन् | सर्वयोः | सर्वेषु |

# सर्वादिगणः



- उभशब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। तस्येह = उभशब्दस्य सर्वादिगणे पाठोऽकँजर्थः = उभकौ इति प्रयोगे 'अव्ययसर्वनाम्नामकँच्-प्राक्टेः इति सूत्रेण अकँच् प्रत्ययार्थः।
- उभयशब्दस्य द्विवचनं नास्ति। उभयः। उभये। उभयम्। उभयान्। उभयेन। उभयैः। उभयस्मै। उभयेभ्यः। उभयस्मात्। उभयेभ्यः। उभयस्य। उभयेषाम्। उभयस्मिन्। उभयेषु॥
- डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः॥
- नेम इत्यर्धे॥
- समः सर्वपर्याय स्तुल्यपर्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सर्वादिगणः



- सूत्रम्- **पूर्वपरावरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायामसंज्ञायाम्॥ (१,१.३४)**
- सूत्रार्थः- एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे, पूर्वाः। असंज्ञायां किम्? उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः, कुशला इत्यर्थः॥
- **स्वस्य**=पूर्वादिशब्दस्य **अभिधेयः** =वाच्यार्थः अर्थात् पूर्वत्वादिरूपेण प्रतीयमानो दिग्देशकालरूपः, **तेन** = स्वाभिधेयेन=दिग्देशकालरूपवाच्यार्थेन, **अपेक्षः** = अपेक्षमाणः **योऽवधिः**= मर्यादारूपः तस्य **नियमः** = नैयत्यमेव व्यवस्था उच्यते।
- **देशस्योदाहरणम्-** (काशी पूर्वा। कुतः पूर्वा? प्रयागात्
- **दिश उदाहरणम्-** पूर्वस्यां रविरुदेति।
- **कालस्योदाहरणम् -** पूर्वे रावणादयः।

# सर्वादिगणः



- **सूत्रम्- स्वमज्ञातिधनाख्यायाम्॥ (१,१.३५)**
- **सूत्रार्थः-** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः आत्मीयाः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु, स्वाः ज्ञातयोऽर्था वा॥
- **सूत्रम्- अन्तरं बहिर्योगोपसंव्यानयोः॥ (१,४.३६)**
- **सूत्रार्थः-** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा। अन्तरे, अन्तरा वा गृहाः बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः परिधानीया इत्यर्थः॥
- **सूत्रम्- पूर्वादिभ्यो नवभ्यो वा॥ (लसक_१५९ = पा_७,१.१६)**
- **सूत्रार्थः-** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सर्वादिगणः



- सूत्रम्- प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च॥ (१,१.३३)
- सूत्रार्थः- एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः॥
- तयः प्रत्ययः (द्वितय-त्रितय-चतुष्टय-पञ्चतय)। द्वितये, द्वितयाः। शेषं रामवत्॥
- नेमे, नेमाः। शेषं सर्ववत्॥
- वार्तिकम्-(तीयस्य ङित्सु वा)
- वार्तिकार्थः- तीयप्रत्ययान्तानां ङित्विभक्तिषु सर्वनामसंज्ञा विकल्पेन भवति।
  द्वितीयस्मै, द्वितीयायेत्यादि। एवं तृतीयः॥
- निर्जरः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पूर्वशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पूर्वः | पूर्वौ | 1.पूर्वे 2.पूर्वाः |
| सम्बोधनम् | हे पूर्व | हे पूर्वौ | 1.हे पूर्वे 2.हे पूर्वा |
| द्वितीया | पूर्वम् | पूर्वौ | पूर्वान् |
| तृतीया | पूर्वेण | पूर्वाभ्याम् | पूर्वैः |
| चतुर्थी | पूर्वस्मै | पूर्वाभ्याम् | पूर्वेभ्यः |
| पञ्चमी | 1.पूर्वस्मात्-द् 2.पूर्वात्-द् | पूर्वाभ्याम् | पूर्वेभ्यः |
| षष्ठी | पूर्वस्य | पूर्वयोः | पूर्वेषाम् |
| सप्तमी | 1.पूर्वस्मिन् 2.पूर्वे | पूर्वयोः | पूर्वेषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रथमशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तपुँल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रथमः | प्रथमौ | 1.प्रथमे 2.प्रथमाः |
| सम्बोधनम् | हे प्रथम | हे प्रथमौ | 1.हे प्रथमे 2. हे प्रथमाः |
| द्वितीया | प्रथमम् | प्रथमौ | प्रथमान् |
| तृतीया | प्रथमेन | प्रथमाभ्याम् | प्रथमैः |
| चतुर्थी | प्रथमाय | प्रथमाभ्याम् | प्रथमेभ्यः |
| पञ्चमी | प्रथमात्-द् | प्रथमाभ्याम् | प्रथमेभ्यः |
| षष्ठी | प्रथमस्य | प्रथमयोः | प्रथमानाम् |
| सप्तमी | प्रथमे | प्रथमयोः | प्रथमेषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्तेषु निर्जर-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- सूत्रम्- जराया जरसन्यतरस्याम्॥ (७,२.१०१)
- सूत्रार्थः- (जराशब्दस्य जरस् आदेशो वा स्यात्) अजादौ विभक्तौ।
- (परिभाषा)-- पदाङ्गाधिकारे तस्य च तदन्तस्य च।
- अर्थः- पदाधिकारे= अष्टमाध्याये, अङ्गाधिकारे=षष्ठाध्यायस्य चतुर्थपादमारभ्य सप्तमाध्यायपर्यन्ते, तस्य = सूत्रोच्चारितस्य 'जरा' इत्यादेः तदन्तस्य = सूत्रोच्चारितान्तस्य परमजरा इत्यादिकस्य च (ग्रहणं भवति।)
- (परिभाषा)-- निर्दिश्यमानस्यादेशा भवन्ति।
- अर्थः- निर्दिश्यमानस्य = सूत्रे षष्ठीनिर्देशेन उच्चार्यमाणस्यैव आदेशा भवन्ति।
- (परिभाषा)-- एकदेशविकृतमनन्यवत्।
- अर्थः- एकदेशेन विकृतं = रुपान्तरं प्राप्तम् अनन्यवत् = अन्यसदृशं न भवति।
- इति जरशब्दस्य जरस्। निर्जरसौ। निर्जरस इत्यादि। पक्षे हलादौ च रामवत्॥

निर्जर + सुँ = निर्जरः

निर्जर + औ

निर्जरस् + औ

1.निर्जरसौ 2.निर्जरौ



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निर्जरशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | निर्जरः | निर्जरस्+ औ= निर्जरसौ<br>निर्जरौ | निर्जरस्+ अस् = निर्जरसः<br>निर्जराः |
| सम्बोधनम् | हे निर्जर | हे निर्जरस्+ औ= हे निर्जरसौ<br>हे निर्जरौ | हे निर्जरस्+ अस् = हे निर्जरसः<br>हे निर्जराः |
| द्वितीया | निर्जरस्+ अम्= निर्जरसम्<br>निर्जरम् | निर्जरस्+ औ= निर्जरसौ<br>निर्जरौ | निर्जरस्+ अस् = निर्जरसः<br>निर्जरान् |
| तृतीया | निर्जरस्+ आ = निर्जरसा<br>निर्जरेण | निर्जराभ्याम् | निर्जरैः |
| चतुर्थी | निर्जरस्+ ए = निर्जरसे<br>निर्जराय | निर्जराभ्याम् | निर्जरेभ्यः |
| पञ्चमी | निर्जरस्+ अस् = निर्जरसः<br>निर्जरात्-द् | निर्जराभ्याम् | निर्जरेभ्यः |
| षष्ठी | निर्जरस्+ अस् = निर्जरसः<br>निर्जरस्य | निर्जरस्+ ओस् = निर्जरसोः<br>निर्जरयोः | निर्जरस्+ आम् = निर्जरसाम्<br>निर्जराणाम् |
| सप्तमी | निर्जरस्+इ= निर्जरसि<br>निर्जरे | निर्जरस्+ ओस् = निर्जरसोः<br>निर्जरयोः | निर्जरेषु |

- ❖ अजादिविभक्तिः
- ❖ हलादिविभक्तिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आदन्तेषु विश्वपा-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- विश्वपाः॥
- सूत्रम्- दीर्घाज्जसि च॥ (६,१.१०५)
- सूत्रार्थः- दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ॥

विश्वपा + औ
विश्वपौ (वृद्धिरेचि)

विश्वपा + जस्
विश्वपा + अस् (अकः सवर्णे दीर्घः)
विश्वपाः

विश्वपा + अम् (अमि पूर्वः)
विश्वपाम्

आ ई ऊ ॠ
ए ओ ऐ औ

जस् (विभक्तिः)

इच् (प्रत्याहारः)

पूर्वसवर्णदीर्घो न

- सूत्रम्- सुँडनपुंसकस्य॥ (१,१.४३)
- सूत्रार्थः- स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# आदन्तेषु विश्वपा-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

## (पदसंज्ञाविधायकं सूत्रम्)

- सूत्रम्- स्वादिष्वसर्वनामस्थाने॥ (१,४.१७)
- सूत्रार्थः- कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु (प्रत्ययेषु) पूर्वं पदं स्यात्॥

## (भसंज्ञाविधायकं सूत्रम्)

- सूत्रम्- यचि भम्॥ (१,४.१८)
- सूत्रार्थः- यादिष्वजादिषु (य-आदि अच्-आदिषु) च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु (प्रत्ययेषु) पूर्वं भसंज्ञं स्यात्॥

विश्वपा + शस्
विश्वपा + अस्

- सूत्रम्- आकडारादेका संज्ञा॥ (१,४.१)
- सूत्रार्थः- इत ऊर्ध्वं ‘कडाराः कर्मधारय’(२.२.३८) इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या पराऽनवकाशा च॥ (द्वयोः सावकाशत्वे परा भवति। एकस्य निरवकाशत्वे तु अनवकाशा एव।)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आदन्तेषु विश्वपा-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुँल्लिङ्गाः)

❖ सूत्रम्- आतो धातोः॥ (६,४.१४०)

❖ सूत्रार्थः- आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलो ऽन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम् ? हाहान्॥

विश्वपा + शस्
विश्वपा + अस्
विश्वप् + अस्
विश्वपः

| तृतीया | विश्वप्+ आ = विश्वपा | विश्वपाभ्याम् | विश्वपाभिः |
|---|---|---|---|
| चतुर्थी | विश्वप्+ ए = विश्वपे | विश्वपाभ्याम् | विश्वपाभ्यः |
| पञ्चमी | विश्वप्+ अस् = विश्वपः | विश्वपाभ्याम् | विश्वपाभ्यः |
| षष्ठी | विश्वप्+ अस् = विश्वपः | विश्वप्+ ओस् = विश्वपोः | विश्वप्+ आम् = विश्वपाम् |
| सप्तमी | विश्वप्+ इ = विश्वपि | विश्वप्+ ओस् = विश्वपोः | विश्वपासु |

❖ भसंज्ञा
❖ पदसंज्ञा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु हरि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

- हरिः। हरी॥
- सूत्रम्- जसि च॥ (७,३.१०९)
- सूत्रार्थः- ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥
- सूत्रम्- ह्रस्वस्य गुणः॥ (७,३.१०८)
- सूत्रार्थः- (ह्रस्वान्तस्य अङ्गस्य गुणः स्यात्) सम्बुद्धौ। हे हरे। हरिम्। हरी। हरीन्॥
- सूत्रम्- शेषो घ्यसखि॥ (१,४.७) (पदच्छेदः- शेषः घि असखि)
- सूत्रार्थः- शेष इति स्पष्टार्थम्। ह्रस्वौ याविदुतौ = इकार-उकारौ तदन्तं= इकारान्तम् उकारान्तं(हरि-गुरुशब्दम् इत्यादिं) सखिवर्जं घिसंज्ञम्॥
- सूत्रम्- आङो नाऽस्त्रियाम्॥ (७,३.१२०)
- सूत्रार्थः- घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा। हरिणा। हरिभ्याम्। हरिभिः॥

| | |
|---|---|
| हरि + औ<br>ई<br>हरी | हरि + जस्<br>हरि + अस्<br>हरे + अस्<br>हरयः |
| हरि + शस्<br>हरि + अस्<br>ई<br>हरीस्<br>हरीन् | हरि + टा<br>हरि + आ<br>हरि + ना<br>हरिणा |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु हरि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- सूत्रम्- घेर्ङिति॥ (७,३.१११)
- सूत्रार्थः- घिसंज्ञस्य ङिति सुपि गुणः। हरये। हरिभ्याम्। हरिभ्यः॥
- सूत्रम्- ङसिँङसोश्च॥ (६,१.११०)
- सूत्रार्थः- एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २। हर्योः २। हरीणाम्॥
- सूत्रम्- अच्च घेः॥ (७,३.११९)
- सूत्रार्थः- इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च। हरौ। हरिषु। एवं कव्यादयः॥

1.ए
2.ओ

अ — ङसिँ, ङस्

पूर्वरूपम्

| | |
|---|---|
| हरि + ए | हरि + अस् |
| हरे + ए | हरे + अस् |
| हर् अय् + ए | हरेस् |
| हरये | हरेः |

| | |
|---|---|
| हरि + ओस् | हरि + आम् |
| हर् य् + ओस्(यण्) | हरि + न् आम् |
| हर्योस् | हरी + नाम् |
| हर्योः | हरीणाम् |

हरि + ङि
हरि + इ
हर + औ (वृद्धिः)
हरौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हरिशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | हरिः | हरी | हरयः |
| सम्बोधनम् | हे हरे | हे हरी | हे हरयः |
| द्वितीया | हरिम् | हरी | हरीन् |
| तृतीया | हरिणा | हरिभ्याम् | हरिभिः |
| चतुर्थी | हरये | हरिभ्याम् | हरिभ्यः |
| पञ्चमी | हरेः | हरिभ्याम् | हरिभ्यः |
| षष्ठी | हरेः | हर्योः | हरीणाम् |
| सप्तमी | हरौ | हर्योः | हरिषु |

- ह्रस्वान्तनिमित्तक-कार्यम्
- घिसंज्ञानिमित्तक-कार्यम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु सखि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- सूत्रम्- अनँङ् सौ॥ (७,१.९३)
- सूत्रार्थः- सख्युरङ्गस्यानँङादेशोऽसम्बुद्धौ सौ॥
- सूत्रम्- अलोऽन्त्यात्पूर्व उपधा॥ (१,१.६५)
- सूत्रार्थः- अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः॥
- सूत्रम्- सर्वनामस्थाने चासम्बुद्धौ॥ (६,४.८)
- सूत्रार्थः- नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने॥
- सूत्रम्- अपृक्त एकाल् प्रत्ययः॥ (१,२.४१)
- सूत्रार्थः- एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्॥
- सूत्रम्- हल्ङ्याब्भ्यो दीर्घात् सुँतिस्यपृक्तं हल्॥ (६,१.६८)
- सूत्रार्थः- हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुँतिसीत्येतदपृक्तं हल् लुप्यते॥
- स्पष्टार्थः-हलन्तात्परं सुँतिसीत्येतदपृक्तं हल् लुप्यते। दीर्घौ यौ ङ्यापौ तदन्तात् परं सुँ इत्येतदपृक्तं हल् लुप्यते॥
- सूत्रम्- नलोपः प्रातिपदिकान्तस्य॥ (८,२.७)
- सूत्रार्थः- प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा॥

सखि + सुँ
सखि + स्
सख् अनँङ् + स्
सख् अन् + स्
(उपधा) (अपृक्तम्)
सख् आन् + स्
सख् आन्
सख् आ
सखा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु सखि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

- सूत्रम्- सख्युरसंबुद्धौ॥ (७,१.९२)
- सूत्रार्थः- सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्॥
- सूत्रम्- अचो ञ्णिति॥ (७,२.११५)
- सूत्रार्थः- अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये॥
- सूत्रम्- ख्यत्यात्परस्य॥ (६,१.११२)
- सूत्रार्थः- खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिँङसोरत उः। सख्युः॥
- सूत्रम्- औत्॥ (७,३.११८)
- सूत्रार्थः- इतः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥

| सुँ (स्) | औ | जस् (अस्) |
|---|---|---|
| अम् | औट् (औ) | |

सखि + औ
सखै + औ
सख् आय् + औ
सखायौ

सखि + जस्
सखै + अस्
सख् आय् + अस्
सखायः

सखि + ङसिँ
सखि + अस्
सख् य् + अस्
सख् य् + उस्
सख्युः

सखि + ङि
सखि + इ
सखि + औ
सख् य् + औ
सख्यौ

अजन्त-अङ्गस्य वृद्धिः

ञित् (प्रत्ययः)

णित् (प्रत्ययः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सखिशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सखा | सखायौ | सखायः |
| सम्बोधनम् | हे सखे | हे सखायौ | हे सखायः |
| द्वितीया | सखायम् | सखायौ | सखीन् |
| तृतीया | सख्या | सखिभ्याम् | सखिभिः |
| चतुर्थी | सख्ये | सखिभ्याम् | सखिभ्यः |
| पञ्चमी | सख्युः | सखिभ्याम् | सखिभ्यः |
| षष्ठी | सख्युः | सख्योः | सखीनाम् |
| सप्तमी | सख्यौ | सख्योः | सखिषु |

- अनङादेशादिः
- णिद्वत्,वृद्धिः
- केवलं यण्कार्यम्
- उः विधानम्
- औत् आदेशः
- हरिशब्दवत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पतिशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

❖ सूत्रम्- पतिः समास एव॥ (१,४.८)

❖ सूत्रार्थः- (पतिशब्दः समासे एव) घिसंज्ञः (न तु केवलः)। (पत्या पत्ये) पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये।

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पतिः | पती | पतयः |
| सम्बोधनम् | हे पते | हे पती | हे पतयः |
| द्वितीया | पतिम् | पती | पतीन् |
| तृतीया | पत्या | पतिभ्याम् | पतिभिः |
| चतुर्थी | पत्ये | पतिभ्याम् | पतिभ्यः |
| पञ्चमी | पत्युः | पतिभ्याम् | पतिभ्यः |
| षष्ठी | पत्युः | पत्योः | पतीनाम् |
| सप्तमी | पत्यौ | पत्योः | पतिषु |

❖ सखिशब्दवत्

❖ हरिशब्दवत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु कति-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- कतिशब्दो नित्यं बहुवचनान्तः॥
- सूत्रम्- बहुगणवतुँडति संख्या॥ (१,१.२३)
- सूत्रार्थः- बहु-गणशब्दौ वतुँ-डतिप्रत्ययान्तौ चेत्येते सङ्ख्यासञ्ज्ञकाः स्युः॥
- सूत्रम्- डति च॥ (१,१.२५)
- सूत्रार्थः- डत्यन्ता संख्या षट्संज्ञा स्यात्॥
- सूत्रम्- षड्भ्यो लुक्॥ (७,१.२२)
- सूत्रार्थः- (षट्संज्ञकेभ्यः परयोः) जश्शसोः (लुक् स्यात्)॥
- सूत्रम्- प्रत्ययस्य लुक्श्लुलुपः॥ (१,१.६१)
- सूत्रार्थः- लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥
- सूत्रम्- प्रत्ययलोपे प्रत्ययलक्षणम्॥ (१,१.६२)
- सूत्रार्थः- प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात्। इति जसि चेति गुणे प्राप्ते॥

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | जस् (अस्) |
| द्वितीया | शस् (अस्) |
| तृतीया | भिस् |
| चतुर्थी | भ्यस् |
| पञ्चमी | भ्यस् |
| षष्ठी | आम् |
| सप्तमी | सुप् (सु) |

कति + अस्

1.सङ्ख्यासंज्ञा
2.षट्संज्ञा

कति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु कति-शब्दस्य प्रक्रिया



- सूत्रम्- न लुमताङ्गस्य॥ (१,१.६३)
- सूत्रार्थः- लुमता(लुक्-श्लु-लुप्) शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्।
- कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु।
- युष्मदस्मत्षट्संज्ञकास्त्रिषु (लिङ्गेषु) सरूपाः॥
- कति पुरुषाः?
- कति स्त्रियः?
- कति फलानि?

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | कति |
| द्वितीया | कति |
| तृतीया | कतिभिः |
| चतुर्थी | कतिभ्यः |
| पञ्चमी | कतिभ्यः |
| षष्ठी | कतीनाम् |
| सप्तमी | कतिषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु त्रि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- त्रिशब्दो नित्यं बहुवचनान्तः।
- त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥
- सूत्रम्- त्रेस्त्रयः॥ (७,१.५३)
- सूत्रार्थः- त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु।

त्रि + जस्
त्रे + अस् (जसि च-- गुणः)
त्र् अय् + अस् (अयादेशः)
त्रयस् (रुत्वविसर्गौ)
त्रयः

त्रि + आम्
त्रय + आम् (त्रेस्त्रयः)
त्रय + नुँट् आम् (नुँडागमः)
त्रय + नाम् (सुपि च--दीर्घः)
त्रया + नाम् (णत्वम्)
त्रयाणाम्

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | त्रयः |
| द्वितीया | त्रीन् |
| तृतीया | त्रिभिः |
| चतुर्थी | त्रिभ्यः |
| पञ्चमी | त्रिभ्यः |
| षष्ठी | त्रयाणाम् |
| सप्तमी | त्रिषु |

त्रि + शस्
त्रि + अस् (पूर्वसवर्णदीर्घः)
त्री + स् (नत्वम्)
त्रीन्



संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु प्रियत्रि-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

❖ अत्रेदं ज्ञातव्यम्- स्वार्थं परित्यज्य परार्थावलम्बनत्वं गौणत्वम्। यथा- **प्रिय'त्रि'** इत्यत्र त्रिशब्दः स्वार्थम्= त्रित्व-अर्थं त्यक्त्वा (बहुव्रीहिसमासवशात् समासवृत्तौ) परार्थस्य= 'प्रियाः त्रयः यस्य सः' तादृशस्य कस्यचिद् अन्यपुरुषस्य अर्थस्य अवलम्बनं करोति, अतः प्रियत्रि-मध्ये त्रिशब्दः गौणः= अप्रधानः वर्त्तते। अस्मिन् व्याकरणशास्त्रे तु **'गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः'** इति न्यायात् **'त्रेस्त्रयः'** इति सूत्रेण त्रयादेशस्य प्रवृत्तिर्मुख्ये 'त्रि'शब्द एव स्यान्न तु गौणे 'प्रियत्रि'शब्दे। किन्तु भाष्यप्रामाण्यात् पदकार्येष्वेवास्य न्यायस्य प्रवृत्तिर्भवति न तु अङ्गकार्येषु, इत्येवाभिप्रेत्य लिखति दीक्षितशिष्यः वरदराजाचार्यः-- **गौणत्वेऽपि (त्रयादेशो भवति) प्रियत्रयाणाम्॥**

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रियत्रिः | प्रियत्री | प्रियत्रयः |
| सम्बोधनम् | प्रियत्रे | प्रियत्री | प्रियत्रयः |
| द्वितीया | प्रियत्रिम् | प्रियत्री | प्रियत्रीन् |
| तृतीया | प्रियत्रिणा | प्रियत्रिभ्याम् | प्रियत्रिभिः |
| चतुर्थी | प्रियत्रये | प्रियत्रिभ्याम् | प्रियत्रिभ्यः |
| पञ्चमी | प्रियत्रेः | प्रियत्रिभ्याम् | प्रियत्रिभ्यः |
| षष्ठी | प्रियत्रेः | प्रियत्र्योः | प्रियत्रयाणाम् |
| सप्तमी | प्रियत्रौ | प्रियत्र्योः | प्रियत्रिषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु पपी-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- पाति= (रक्षति) लोकमिति पपीः= सूर्यः॥
- दीर्घाज्जसि च॥ (६,१.१०५) पप्यौ २। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः २। पप्योः। दीर्घत्वान्न नुट्, पप्याम्। ङौ तु सवर्णदीर्घः, पपी। पप्योः। पपीषु।
- एवं वातप्रम्यादयः॥

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पपीः | पप्यौ | पप्यः |
| सम्बोधनम् | हे पपीः | हे पप्यौ | हे पप्यः |
| द्वितीया | पपीम् | पप्यौ | पपीन् |
| तृतीया | पप्या | पपीभ्याम् | पपीभिः |
| चतुर्थी | पप्ये | पपीभ्याम् | पपीभ्यः |
| पञ्चमी | पप्यः | पपीभ्याम् | पपीभ्यः |
| षष्ठी | पप्यः | पप्योः | पप्याम् |
| सप्तमी | पपी | पप्योः | पपीषु |

- यणादेशः
- पूर्वरूपम्
- पूर्वसवर्णदीर्घः
- सवर्णदीर्घः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु बहुश्रेयसी-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

❖ बह्व्यः श्रेयस्यो= अतिशयप्रशंसनीयाः (स्त्रियः) यस्य स (पुरुषः) बहुश्रेयसी॥

❖ सूत्रम्- यू स्त्र्याख्यौ नदी॥ (१,४.३)

❖ सूत्रार्थः- ईदूदन्तौ= ईकारान्त-ऊकारान्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः।

❖ वार्तिकम्- (प्रथमलिङ्गग्रहणं च)।

❖ वार्तिकार्थः- पूर्वं= समासवृत्तेः प्राक् स्त्र्याख्यस्य= नित्यस्त्रीलिङ्गवाचकस्य (शब्दस्य) उपसर्जनत्वेऽपि= अन्यार्थविशेषणीभूतत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥

❖ सूत्रम्- अम्बार्थनद्योर्ह्रस्वः॥ (७,३.१०७)

❖ सूत्रार्थः- (अम्बार्थानां नद्यन्तानां च शब्दानां ह्रस्वः स्यात्) सम्बुद्धौ। हे बहुश्रेयसि॥

ईकारान्ता- नदी,गौरी इत्यादयः

ऊकारान्ताः- वधू , श्वश्रू इत्यादयः

नित्यस्त्रीलिङ्गाः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु बहुश्रेयसी-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

- सूत्रम्- आण्नद्याः॥ (७,३.११२) (पदच्छेदः आट् नद्याः)
- सूत्रार्थः- नद्यन्तात्परेषां ङितामाडागमः॥
- सूत्रम्- आटश्च॥ (६,१.९०)
- सूत्रार्थः- आटोऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः-२। बहुश्रेयसीनाम्॥
- सूत्रम्- ङेराम्नद्याम्नीभ्यः॥ (७,३.११७)
- सूत्रार्थः- नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषं पपीवत्॥

बहुश्रेयसी + ङे
बहुश्रेयसी + आ(ट्) ए
बहुश्रेयसी + ऐ
बहुश्रेयस्यै

बहुश्रेयसी + ङसिँ
बहुश्रेयसी + आ(ट्) अस्
बहुश्रेयसी + आस्
बहुश्रेयस्याः

बहुश्रेयसी + आम्
बहुश्रेयसी + नुँट् आम्
बहुश्रेयसी + नाम्
बहुश्रेयसीनाम्




बहुश्रेयसी + इ (ङि)
बहुश्रेयसी + आ(ट्) आम्
बहुश्रेयसी + आम्
बहुश्रेयस्याम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुश्रेयसीशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | बहुश्रेयसी | बहुश्रेयस्यौ | बहुश्रेयस्यः |
| सम्बोधनम् | हे बहुश्रेयसि | हे बहुश्रेयस्यौ | हे बहुश्रेयस्यः |
| द्वितीया | बहुश्रेयसीम् | बहुश्रेयस्यौ | बहुश्रेयसीन् |
| तृतीया | बहुश्रेयस्या | बहुश्रेयसीभ्याम् | बहुश्रेयसीभिः |
| चतुर्थी | बहुश्रेयस्यै | बहुश्रेयसीभ्याम् | बहुश्रेयसीभ्यः |
| पञ्चमी | बहुश्रेयस्याः | बहुश्रेयसीभ्याम् | बहुश्रेयसीभ्यः |
| षष्ठी | बहुश्रेयस्याः | बहुश्रेयस्योः | बहुश्रेयसीनाम् |
| सप्तमी | बहुश्रेयस्याम् | बहुश्रेयस्योः | बहुश्रेयसीषु |

- नदीसंज्ञाकार्यम्
- पपीवत् -रूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु प्रधी-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

- अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्॥
- प्रधीः॥
- सूत्रम्- अचि श्नुधातुभ्रुवां य्वोरियँङुवँङौ॥ (६,४.७७)
- सूत्रार्थः- श्नु प्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य चेयँङुवँङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥
- सूत्रम्- एरनेकाचोऽसंयोगपूर्वस्य॥ (६,४.८२)
- सूत्रार्थः- धात्ववयवसंयोगपूर्वो न भवति य इवर्णः, तदन्तो यो धातु, तदन्तस्यानेकाचोऽङ्गस्य यण् स्याद्, अजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्।

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रधीः | प्रध्यौ | प्रध्यः |
| सम्बोधनम् | हे प्रधीः | हे प्रध्यौ | हे प्रध्यः |
| द्वितीया | प्रध्यम् | प्रध्यौ | प्रध्यः |
| तृतीया | प्रध्या | प्रधीभ्याम् | प्रधीभिः |
| चतुर्थी | प्रध्ये | प्रधीभ्याम् | प्रधीभ्यः |
| पञ्चमी | प्रध्यः | प्रधीभ्याम् | प्रधीभ्यः |
| षष्ठी | प्रध्यः | प्रध्योः | प्रध्याम् |
| सप्तमी | प्रध्यि | प्रध्योः | प्रधीषु |

- यण्-कार्यम्
- पपीवद्-रूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु ग्रामणी-नी-सुश्री-यवक्री- शब्दानां प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुँल्लिङ्गाः)

- ❖ सूत्रम्- अचि श्नुधातुभ्रुवां य्वोरियँङुवँङौ॥ (६,४.७७)
- ❖ सूत्रार्थः- श्नु प्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य चेयँङुवँङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥
- ❖ सूत्रम्- एरनेकाचोऽसंयोगपूर्वस्य॥ (६,४.८२)
- ❖ सूत्रार्थः- धात्ववयवसंयोगपूर्वो न भवति य इवर्णः, तदन्तो यो धातु, तदन्तस्यानेकाचोऽङ्गस्य यण् स्याद्, अजादौ प्रत्यये परे। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। पपीवत्।
- ❖ एवं ग्रामणीः। ङौ तु ग्रामण्याम्॥
- ❖ अनेकाचः किम् ? नीः। नियौ। नियः। अमि शसि च परत्वादियङ्, नियम् (नियः)। ङेराम् नियाम्॥
- ❖ असंयोगपूर्वस्य किम् ? सुश्रियौ। यवक्रियौ॥

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | नीः | नी / न् इय्+ औ= नियौ | निय्+अस्=नियः |
| सम्बोधनम् | हे नीः | हे नियौ | हे नियः |
| द्वितीया | नियम् | नियौ | नियः |
| तृतीया | निया | नीभ्याम् | नीभिः |
| चतुर्थी | निये | नीभ्याम् | नीभ्यः |
| पञ्चमी | नियः | नीभ्याम् | नीभ्यः |
| षष्ठी | नियः | नियोः | नियाम् |
| सप्तमी | नियाम् | नियोः | नीषु |

❖ इयँङ् (इय्) - आदेशः

❖ पपीवद्-रूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु शुद्धधी-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- (शुद्धा धीर्यस्य सः शुद्धधीः)
- सूत्रम्- गतिश्च ॥ (१,४.६०)
- सूत्रार्थः- प्रादयः क्रियायोगे गतिसंज्ञाः स्युः।
- (उप+तिष्ठते, प्र+णेयम्)
- वार्त्तिकम्- (गतिकारकेतरपूर्वपदस्य यण् नेष्यते)। शुद्धधियौ ॥
- वार्त्तिकार्थः- गति-कारकाभ्यां भिन्नं पूर्वपदं यस्य अङ्गस्य तस्य यणादेशो न स्यात्।
- (क्रियान्वयित्वं कारकत्वम्)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | शुद्धधीः | शुद्धधियौ | शुद्धधियः |
| सम्बोधनम् | हे शुद्धधीः | हे शुद्धधियौ | हे शुद्धधियः |
| द्वितीया | शुद्धधियम् | शुद्धधियौ | शुद्धधियः |
| तृतीया | शुद्धधिया | शुद्धधीभ्याम् | शुद्धधीभिः |
| चतुर्थी | शुद्धधिये | शुद्धधीभ्याम् | शुद्धधीभ्यः |
| पञ्चमी | शुद्धधियः | शुद्धधीभ्याम् | शुद्धधीभ्यः |
| षष्ठी | शुद्धधियः | शुद्धधियोः | शुद्धधियाम् |
| सप्तमी | शुद्धधियि | शुद्धधियोः | शुद्धधीषु |

- इयँङ् (इय्) - आदेशः
- पपीवद्-रूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु सुधी-सुखी-सुती- शब्दानां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुँल्लिङ्गाः)

- सूत्रम्- न भूसुधियोः॥ (६,४.८५)
- सूत्रार्थः- एतयोरचि सुपि यण्न। सुधियौ। सुधिय इत्यादि॥
- सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत्।

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रधीः | प्रध्यौ | प्रध्यः |
| सम्बोधनम् | हे प्रधीः | हे प्रध्यौ | हे प्रध्यः |
| द्वितीया | प्रध्यम् | प्रध्यौ | प्रध्यः |
| तृतीया | प्रध्या | प्रधीभ्याम् | प्रधीभिः |
| चतुर्थी | प्रध्ये | प्रधीभ्याम् | प्रधीभ्यः |
| पञ्चमी | प्रध्यः | प्रधीभ्याम् | प्रधीभ्यः |
| षष्ठी | प्रध्यः | प्रध्योः | प्रध्याम् |
| सप्तमी | प्रध्यि | प्रध्योः | प्रधीषु |

| ❖ यण्-कार्यम् | ❖ पपीवद्-रूपम् |
|---|---|

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु शम्भु-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | शम्भुः | शम्भू | शम्भु+ अस् , शम्भो+अस् शम्भ् अव्+अस्= **शम्भवः** |
| सम्बोधनम् | हे शम्भो | हे शम्भू | हे शम्भवः |
| द्वितीया | शम्भुम् | शम्भू | शम्भून् |
| तृतीया | शम्भुना | शम्भुभ्याम् | शम्भुभिः |
| चतुर्थी | शम्भु+ ए , शम्भो+ए शम्भ् अव्+ए= **शम्भवे** | शम्भुभ्याम् | शम्भुभ्यः |
| पञ्चमी | शम्भु+ अस् ,शम्भो+अस् शम्भोस्= **शम्भोः** | शम्भुभ्याम् | शम्भुभ्यः |
| षष्ठी | शम्भोः | शम्भु+ ओस् शम्भ् व्+अस्= **शम्भ्वोः** | शम्भूनाम् |
| सप्तमी | शम्भु+ इ , शम्भ+औ = **शम्भौ** | शम्भ्वोः | शम्भुषु |

- शम्भुर्हरिवत्।
- एवं भान्वादयः॥

- ह्रस्वान्तनिमि-त्तककार्यम्
- पूर्वसवर्णदीर्घः
- पूर्वरूपम्
- घिसंज्ञानिमि-त्तककार्यम्
- यण्-कार्यम्
- नुँडागमः,दीर्घश्च
- विभक्तियोजनमा-त्रम्, रुँत्वविसर्गौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु क्रोष्टु-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

❖ **सूत्रम्- तृज्वत्क्रोष्टुः॥ (६,१.९५)**

❖ सूत्रार्थः- असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥

❖ **सूत्रम्- ऋतो ङि-सर्वनामस्थानयोः॥ (७,३.११०)**

❖ सूत्रार्थः- ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते –

❖ **सूत्रम्- ऋदुशनस्पुरुदंसोऽनेहसां च॥ (७,१.९४)**

❖ सूत्रार्थः- ऋदन्तानाम् उशनसादीनाम् च अनँङ् स्यात् असंबुद्धौ सौ॥

❖ **सूत्रम्- अप्तृन्तृच्स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृणाम्॥**

सूत्रार्थः- अबादीनाम् उपधाया दीर्घः असंबुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्॥

क्रोष्टु+ स्
क्रोष्टृ+ स् (तृज्वत्क्रोष्टुः)
क्रोष्ट् अन्+ स् (ऋदुशनस्पुरु...)
क्रोष्ट् आन्+ स् (अप्तृन्तृच्स्वसृ..)
क्रोष्ट् आन् (हल्ङ्याभ्य...)
क्रोष्टा (नलोपः...)

क्रोष्टु+ औ
क्रोष्टृ+ औ (तृज्वत्क्रोष्टुः)
क्रोष्ट् अर्+ औ (ऋतो ङि-सर्वनाम..)
क्रोष्ट् आर्+ औ (ऋतो ङि-सर्वनाम..)
क्रोष्टारौ

क्रोष्टु+ अस्
क्रोष्टृ+ अस् (तृज्वत्क्रोष्टुः)
क्रोष्ट् अर्+ अस् (ऋतो ङि-सर्वनाम..)
क्रोष्ट् आर्+ अस् (ऋतो ङि-सर्वनाम..)
क्रोष्टारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु क्रोष्टु-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

- सूत्रम्- विभाषा तृतीयादिष्वचि॥ (७,१.९७)
- सूत्रार्थः- अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥
- सूत्रम्- ऋत उत्॥ (६,१.१११)
- सूत्रार्थः- ऋतो ङसिङसोरति उदेकादेशः। रपरः॥

- नियमसूत्रम्- सिद्धे सत्यारम्भो नियमार्थः।

- सूत्रम्- रात्सस्य॥ (८,२.२४)
- सूत्रार्थः- रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः २। क्रोष्ट्रोः २। (उदाहरणम्- ऊर्क्)
- काशिका वृत्तौ अर्थः- संयोगान्तपदस्य यो रेफः तस्मादुत्तरस्य अन्तस्य सकारस्य लोपो भवति।

| तृज्वत्-पक्ष | तृज्वद् अभाव-पक्ष |
|---|---|
| क्रोष्टु+ आ<br>क्रोष्टृ+ आ<br>क्रोष्ट्रा | क्रोष्टु+ आ<br>क्रोष्टु+ ना<br>क्रोष्टुना |
| क्रोष्टु+ अस्<br>क्रोष्टृ + अस्<br>क्रोष्ट् उर् + स्<br>क्रोष्टुः | क्रोष्टु+ अस्<br>क्रोष्टो+ अस्<br>क्रोष्टोस्<br>क्रोष्टोः |
| क्रोष्टु+ ओस्<br>क्रोष्टृ + ओस्<br>क्रोष्ट् र् + ओस्<br>क्रोष्ट्रोः | क्रोष्टु+ ओस्<br>क्रोष्ट् व् + ओस्<br>क्रोष्ट्वोस्<br>क्रोष्ट्वोः |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु क्रोष्टु-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुँल्लिङ्गाः)

- ❖ वार्त्तिकम्- (नुम्-अचिर-तृज्वद्भावेभ्यो नुँट् पूर्वविप्रतिषेधेन)।
- ❖ वार्त्तिकार्थः- (नुम्= इकोऽचि विभक्तौ, अचिरः= अचि र ऋतः, तृज्वद्भावः- विभाषा तृतीयादिष्वचि, एतान् बाधित्वा पूर्वविप्रतिषेधेन नुँडागमो भवति।)
- ❖ क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥

ह्रस्वनद्यापो नुँट्(7.1.54)
विभाषा तृतीयादिष्वचि(7.1.97)

क्रोष्टु+ आम्
क्रोष्टु+ नाम् (ह्रस्वनद्यापो नुँट्(7.1.54)
क्रोष्टूनाम्

क्रोष्टु+ इ
क्रोष्टृ+ इ (ऋतो ङिसर्वनामस्थानयोः)
क्रोष्ट् अर्+ इ
क्रोष्टरि

क्रोष्टु+ इ
क्रोष्ट+ औ (अच्च घेः)
क्रोष्टौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्रोष्टुशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | क्रोष्टा | क्रोष्टारौ | क्रोष्टारः |
| सम्बोधनम् | हे क्रोष्टो | हे क्रोष्टारौ | हे क्रोष्टारः |
| द्वितीया | क्रोष्टारम् | क्रोष्टारौ | क्रोष्टून् |
| तृतीया | क्रोष्ट्रा<br>क्रोष्टुना | क्रोष्टुभ्याम् | क्रोष्टुभिः |
| चतुर्थी | क्रोष्ट्रे<br>क्रोष्टवे | क्रोष्टुभ्याम् | क्रोष्टुभ्यः |
| पञ्चमी | क्रोष्टुः<br>क्रोष्टोः | क्रोष्टुभ्याम् | क्रोष्टुभ्यः |
| षष्ठी | क्रोष्टुः<br>क्रोष्टोः | क्रोष्ट्रोः<br>क्रोष्ट्वोः | क्रोष्टूनाम् |
| सप्तमी | क्रोष्टरि<br>क्रोष्टौ | क्रोष्ट्रोः<br>क्रोष्ट्वोः | क्रोष्टुषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हूहू-शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | हूहूः | हूहू+ औ = हूह्वौ | हूहू+ अस् = हूह्वः |
| सम्बोधनम् | हे हूहूः | हे हूह्वौ | हे हूह्वः |
| द्वितीया | हूहूम् | हूह्वौ | हूहू+ अस् = हूहून् |
| तृतीया | हूह्वा | हूहूभ्याम् | हूहूभिः |
| चतुर्थी | हूह्वे | हूहूभ्याम् | हूहूभ्यः |
| पञ्चमी | हूह्वः | हूहूभ्याम् | हूहूभ्यः |
| षष्ठी | हूह्वः | हूह्वोः | हूह्वाम् |
| सप्तमी | हूह्वि | हूह्वोः | हूहूषु |

❖ हूहूः। हूह्वौ। हूह्वः। हूहूम् इत्यादि॥

❖ यण्कार्यम्
❖ अमि पूर्वः
❖ प्रथमयोः पूर्वसवर्णः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अतिचमू-शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अतिचमूः | अतिचमू+ औ = अतिचम्वौ | अतिचमू+ अस् = अतिचम्वः |
| सम्बोधनम् | हे अतिचमु | हे अतिचम्वौ | हे अतिचम्वः |
| द्वितीया | अतिचमूम् | अतिचम्वौ | अतिचमून् |
| तृतीया | अतिचम्वा | अतिचमूभ्याम् | अतिचमूभिः |
| चतुर्थी | अतिचमू+ (आ) ए अतिचम्वै | अतिचमूभ्याम् | अतिचमूभ्यः |
| पञ्चमी | अतिचमू+ (आ) अस् अतिचम्वाः | अतिचमूभ्याम् | अतिचमूभ्यः |
| षष्ठी | अतिचमू+ (आ) अस् अतिचम्वाः | अतिचम्वोः | अतिचमूनाम् |
| सप्तमी | अतिचमू+ (आ) आम् अतिचम्वाम् | अतिचम्वोः | अतिचमूषु |

❖ अतिचमूशब्दे तु
नदीकार्य्यं विशेषः।
हे अतिचमु।
अतिचम्वै।
अतिचम्वाः।
अतिचमूनाम्॥

❖ नदीसंज्ञाकार्यम्
❖ यण्कार्यम्
❖ अमि पूर्वः
❖ प्रथमयोः पूर्वसवर्णः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# खलपू-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुल्लिङ्गाः)

- ❖ खलपूः॥
- ❖ सूत्रम्- ओः सुपि॥ (६,४.८३)
- ❖ सूत्रार्थः-धात्ववयवसंयोगपूर्वो न भवति य उवर्णः, तदन्तो यो धातुः, तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः।
- ❖ एवं सुल्वादयः॥ (उल्लू)

❖ यण्-कार्यम्

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | खलपूः | खलप्वौ | खलप्वः |
| सम्बोधनम् | हे खलपूः | हे खलप्वौ | हे खलप्वः |
| द्वितीया | खलप्वम् | खलप्वौ | खलप्वः |
| तृतीया | खलप्वा | खलपूभ्याम् | खलपूभिः |
| चतुर्थी | खलप्वे | खलपूभ्याम् | खलपूभ्यः |
| पञ्चमी | खलप्वः | खलपूभ्याम् | खलपूभ्यः |
| षष्ठी | खलप्वः | खलप्वोः | खलप्वाम् |
| सप्तमी | खलप्वि | खलप्वोः | खलपूषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# स्वभू-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्वभूः | स्वभू+ औ<br>स्वभ् उव्+ औ = स्वभुवौ | स्वभू+ अस्<br>स्वभ् उव्+ अस् =स्वभुवः |
| सम्बोधनम् | हे स्वभूः | हे स्वभुवौ | हे स्वभुवः |
| द्वितीया | स्वभुवम् | स्वभुवौ | स्वभुवः |
| तृतीया | स्वभुवा | स्वभूभ्याम् | स्वभूभिः |
| चतुर्थी | स्वभुवे | स्वभूभ्याम् | स्वभूभ्यः |
| पञ्चमी | स्वभुवः | स्वभूभ्याम् | स्वभूभ्यः |
| षष्ठी | स्वभुवः | स्वभुवोः | स्वभुवाम् |
| सप्तमी | स्वभुवि | स्वभुवोः | स्वभूषु |

- ❖ स्वभूः। स्वभुवौ। स्वभुवः॥

( अत्र इत्थं बाध्य-बाधकभावः )

- ❖ इको यणचि- यण्
- ❖ प्रथमयोः पूर्वसवर्णः- दीर्घः
- ❖ दीर्घाज्जसि च- दीर्घनिषेधः
- ❖ पुनः यण् प्राप्तिः
- ❖ अचिश्नु.....- उवँङादेशः
- ❖ ओः सुपि....- यणादेशः
- ❖ न भूसुधियोः- यण्निषेधः
- ❖ पुनः उवँङ्

❖ उवँङ्-कार्यम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# वर्षाभू-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- वर्षाभूः॥
- सूत्रम्- वर्षाभ्वश्च॥ (६,४.८४)
- सूत्रार्थः-अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥

(अत्र इत्थं बाध्य-बाधकभावो ज्ञेयः)

- इको यणचि- यण्
- प्रथमयोः पूर्वसवर्णः- दीर्घः
- दीर्घाज्जसि च- दीर्घनिषेधः
- पुनः यण् प्राप्तिः
- अचिश्नु.....- उवँङादेशः
- एरनेकाचो....- यणादेशः
- न भूसुधियोः- यण्निषेधः
- वर्षाभ्वश्च- यण्

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | वर्षाभूः | वर्षाभ्वौ | वर्षाभ्वः |
| सम्बोधनम् | हे वर्षाभूः | हे वर्षाभ्वौ | हे वर्षाभ्वः |
| द्वितीया | वर्षाभ्वम् | वर्षाभ्वौ | वर्षाभ्वः |
| तृतीया | वर्षाभ्वा | वर्षाभूभ्याम् | वर्षाभूभिः |
| चतुर्थी | वर्षाभ्वे | वर्षाभूभ्याम् | वर्षाभूभ्यः |
| पञ्चमी | वर्षाभ्वः | वर्षाभूभ्याम् | वर्षाभूभ्यः |
| षष्ठी | वर्षाभ्वः | वर्षाभ्वोः | वर्षाभ्वाम् |
| सप्तमी | वर्षाभ्वि | वर्षाभ्वोः | वर्षाभूषु |

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# दृन्भू- आदिशब्दानां प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- दृन्भूः।
- वार्त्तिकम्- (दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः)। दृन्भ्वौ।
- एवं करभूः॥

(अत्र इत्थं बाध्य-बाधकभावो ज्ञेयः)

- इको यणचि- यण्
- प्रथमयोः पूर्वसवर्णः- दीर्घः
- दीर्घाज्जसि च- दीर्घनिषेधः
- पुनः यण् प्राप्तिः
- अचिश्नु.....- उवँङादेशः
- एरनेकाचो....- यणादेशः
- न भूसुधियोः- यण्निषेधः
- दृन्करपुनः...- यण्

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | वर्षाभूः | वर्षाभ्वौ | वर्षाभ्वः |
| सम्बोधनम् | हे वर्षाभूः | हे वर्षाभ्वौ | हे वर्षाभ्वः |
| द्वितीया | वर्षाभ्वम् | वर्षाभ्वौ | वर्षाभ्वः |
| तृतीया | वर्षाभ्वा | वर्षाभूभ्याम् | वर्षाभूभिः |
| चतुर्थी | वर्षाभ्वे | वर्षाभूभ्याम् | वर्षाभूभ्यः |
| पञ्चमी | वर्षाभ्वः | वर्षाभूभ्याम् | वर्षाभूभ्यः |
| षष्ठी | वर्षाभ्वः | वर्षाभ्वोः | वर्षाभ्वाम् |
| सप्तमी | वर्षाभ्वि | वर्षाभ्वोः | वर्षाभूषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु धातृ-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

❖ धाता। हे धातः। धातारौ। धातारः।

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धातृ+ स् (ऋदुशनस्पुरुदंशोऽनेहसां च)<br>धात् अन्+ स् (अप्तृन्तृच्स्वसृ....)<br>धात् आन्+ स् (1.हल्ङ्याभ्यो...2.न लोप..)<br>**धाता** | धातृ+ औ (ऋतो ङिसर्वनामस्थानयोः)<br>धात् अर् + औ (अप्तृन्तृच्स्वसृ....)<br>धात् आर् + औ<br>**धातारौ** | धातृ+ अस् (ऋतो ङिसर्व..)<br>धात् अर् + अस्(अप्तृन्तृच्स्वसृ.)<br>धात् आर् + अस्<br>**धातारः** |
| सम्बोधनम् | हे धातृ+ स् (ऋतो ङिसर्वनामस्थानयोः)<br>हे धात् अर्+ स् (1.हल्ङ्याभ्यो...)<br>हे धात् अर्= **हे धातः** (रुँत्व-विसर्गौ) | **हे धातारौ** | **हे धातारः** |
| द्वितीया | धातृ+ अम् (ऋतो ङिसर्वनामस्थानयोः)<br>धात् अर् + अम् (अप्तृन्तृच्स्वसृ....)<br>धात् आर् + अम्<br>**धातारम्** | **धातारौ** | धातृ+ अस् (प्रथमयोः पूर्व...)<br>धात् ॠ स् (तस्माच्छसो....)<br>धात् ॠ न्<br>**धातॄन्** |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु धातृ-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुंल्लिङ्गाः)

❖ वार्त्तिकम्- (ऋवर्णान्नस्य णत्वं वाच्यम्)। धातृणाम्।

❖ अर्थः- ऋवर्णात् परस्य नस्य णत्वं स्यात्।

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृतीया | धातृ+ आ ( इको यणचि)<br>धात् र्+ आ = **धात्रा** | **धातृभ्याम्** | **धातृभिः** |
| चतुर्थी | धातृ+ ए ( इको यणचि)<br>धात् र्+ ए = **धात्रे** | **धातृभ्याम्** | **धातृभ्यः** |
| पञ्चमी | धातृ+ अस् ( ऋत उत्)<br>धात् उर्+ स् = **धातुः** | **धातृभ्याम्** | **धातृभ्यः** |
| षष्ठी | **धातुः** | धातृ+ ओस् ( इको यणचि)<br>धात् र्+ ओस् = **धात्रोः** | धातृ+ आम् ( ह्रस्वनद्यापो..)<br>धातृ+ नाम् = ( नामि)<br>**धातृणाम्** |
| सप्तमी | धातृ+ इ ( ऋतो ङि....)<br>धात् अर्+ इ = **धातरि** | **धात्रोः** | **धातृषु** |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु नप्तृ-आदिशब्दानां प्रक्रिया



- ❖ एवं = धातृवत् नप्त्रादयः=नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृ-पर्यन्तशब्दाः सन्ति। रूपाणि भवन्तीति भावः॥
- ❖ प्रश्नः-नप्तृ-आदीनां सप्तशब्दानां तृन्तृजन्तत्वादेव 'अप्तृन्..इति सूत्रेण उपधादीर्घः सिद्धः, किम् एषां पृथक्-ग्रहणेन?
- ❖ (अप्तृन्तृच्स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृणाम्। इति सूत्रे ) नप्त्रादिग्रहणं (उणादीनां) व्युत्पत्तिपक्षे (स्वीकारे) नियमार्थम्(भवति)। तस्य नियमस्य स्वरूपं यथा- उणादिनिष्पन्नानां तृन्तृजन्तानां सञ्ज्ञाशब्दानाम् उपधादीर्घश्चेत्तर्हि नप्त्रादीनां सप्तानामेव नान्येषां सञ्ज्ञाशब्दानामिति। तेन= उक्तनियमस्वीकारेण इह= पितृशब्दे न= अप्तृन्...इति सूत्रेण उपधादीर्घो न भवति। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्।
- ❖ एवं जामात्रादयः॥

## गङ्गाधरः





| व्युत्पत्तिपक्षः | अव्युत्पत्तिपक्षः |
|---|---|
| (यौगिकः) | (रूढः) |
| प्रकृतिप्रत्ययविभागः। | प्रकृतिप्रत्ययविभागो न। |
| तयोरर्थविभागश्च। | समुदायशक्त्या-अर्थबोधनम्। |
| रम्= रमन्ते (योगिनः),घञ् अ= (अधिकरणम्) अस्मिन्। | रामः= दशरथस्य पुत्रः |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ओकारान्तेषु गो-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

- सूत्रम्- गोतो णित्॥ (७,१.९०)
- सूत्रार्थः-ओकाराद्विहितं सर्वनामस्थानं णिद्वत्।
- गौः। गावौ। गावः॥
- सूत्रम्- औतोऽम्शसोः॥ (६,१.९३)
- सूत्रार्थः-ओतोऽम्शसोरचि आकार एकादेशः।
- गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि॥

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गो+ स्<br>गौ+ स्= गौः | गो+ औ<br>गौ+ औ, ग् आव्+ औ= गावौ | गो/ गौ+ अस्<br>ग् आव्+ अस्= गावः |
| सम्बोधनम् | हे गौः | हे गावौ | हे गावः |
| द्वितीया | गो+ अम्<br>गा+ म्= गाम् | गावौ | गो+ अस्<br>गा+ स्= गाः |
| तृतीया | गो+ आ<br>ग् अव्+ आ = गवा | गोभ्याम् | गोभिः |
| चतुर्थी | गो+ ए<br>ग् अव्+ ए = गवे | गोभ्याम् | गोभ्यः |
| पञ्चमी | गो+ अस्<br>ग् ओ+ स् = गोः | गोभ्याम् | गोभ्यः |
| षष्ठी | गो+ अस्<br>ग् ओ+ स् = गोः | गो+ ओस्<br>ग् अव्+ ओस् = गवोः | गो+ आम्<br>ग् अव्+आम्= गवाम् |
| सप्तमी | गो+ इ<br>ग् अव्+ इ = गवि | गवोः | गोषु |

- णिद्वद्भाव-प्रयुक्तवृद्धिः
- आकार-एकादेशः
- एचोऽयवायावः-अवादेशः
- ङसिङसोश्च- पूर्वरूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऐकारान्तेषु रै-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तपुंल्लिङ्गाः)

- सूत्रम्- रायो हलि॥ (७,२.८५)
- सूत्रार्थः-अस्याकारादेशो हलि विभक्तौ।
- राः। रायौ। रायः। राभ्यामित्यादि॥

- रायो हलि- आकारः
- एचोऽयवायावः- आय्

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | रै+ स्<br>रा+ स्= राः | रै+ औ<br>र् आय्+ औ= रायौ | रै+ अस्<br>र् आय्+ अस्= रायः |
| सम्बोधनम् | हे राः | हे रायौ | हे रायः |
| द्वितीया | रायम् | रायौ | रायः |
| तृतीया | राया | रै+ भ्याम्<br>रा+ भ्याम्= राभ्याम् | राभिः |
| चतुर्थी | राये | राभ्याम् | राभ्यः |
| पञ्चमी | रायः | राभ्याम् | राभ्यः |
| षष्ठी | रायः | रायोः | रायाम् |
| सप्तमी | रायि | रायोः | रासु |

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# औकारान्तेषु ग्लौ-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ग्लौः | ग्लौ+ औ<br>ग्ल् आव्+ औ= ग्लावौ | ग्लावः |
| सम्बोधनम् | हे ग्लौः | हे ग्लावौ | हे ग्लावः |
| द्वितीया | ग्लावम् | ग्लावौ | ग्लावः |
| तृतीया | ग्लावा | ग्लौभ्याम् | ग्लौभिः |
| चतुर्थी | ग्लावे | ग्लौभ्याम् | ग्लौभ्यः |
| पञ्चमी | ग्लावः | ग्लौभ्याम् | ग्लौभ्यः |
| षष्ठी | ग्लावः | ग्लावोः | ग्लावाम् |
| सप्तमी | ग्लावि | ग्लावोः | ग्लौषु |

❖ ग्लौः। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि॥

इत्यजन्तपुंल्लिङ्गाः।

❖ एचोऽयवायावः- आव्

# अजन्तपुँल्लिङ्गप्रकरणस्य प्रश्नाः (रामशब्दात् निर्जरं यावत्)

**०१.'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इतिसूत्रेण का सञ्ज्ञा भवति ?**

क. टिसञ्ज्ञा

ख. घिसञ्ज्ञा

ग. नदीसञ्ज्ञा

घ. प्रातिपदिकसञ्ज्ञा

**०२. एतासु अजादिविभक्तिः का ?**

क. सुप्

ख. भ्यस्

ग. जस्

घ. भिस्

**०३. स्वादय एकविंशतिः प्रत्ययाः कस्मान्न भवन्ति?**

क. धातोः

ख. ङ्यन्तात्

ग. आबन्तात्

घ. प्रातिपदिकात्

**०४.एतेषु एकवचनसञ्ज्ञकः प्रत्ययः नास्ति—**

क. सुँ

ख. ङि

ग. जस्

घ. अम्

**०५. 'प्रथमयोः पूर्वसवर्णः' इति सूत्रविषये इदं कथनं समीचीनं नास्ति?**

क. अनेन पूर्वसवर्णदीर्घ एकादेशो विधीयते ।

ख. इदं अजादौ प्रथमा तथा द्वितीयाविभक्तौ प्रवर्त्तते।

ग. अस्य सूत्रस्य बाधकं 'नादिचि' इति सूत्रं वर्त्तते।

घ. इदम् एकविंशति-अजादिविभक्तिषु सर्वत्र प्रवर्तते ।

**०६.सम्बुद्धिसञ्ज्ञा वर्त्तते –**

क. प्रथमाया द्विवचनस्य

ख. प्रथमाया एकवचनस्य

ग. प्रथमाया बहुवचनस्य

घ. सर्वेषाम्

**०७.राम+स् अत्र कस्य अङ्गसञ्ज्ञास्ति ?**

क. स्

ख. राम

ग. राम्+स्

घ. आ

**०८. अट्कुप्वाङ्नुम्व्यवायेऽपि सूत्रस्य पूर्णार्थः कः ?**

क. अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे।

ख. अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि नस्य णः समानपदे।

ग. अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्।

घ. अट् कवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे स्यात्।

**०९.अदन्तशब्देषु पुँल्लिङ्गे इदं विभक्त्यादेशविधानं नास्ति –**

क. टा-इन

ख. भिस्-ऐस्

ग. ङसिँ-आत्

घ. शस्-य

**१०.अदन्तशब्देषु पुल्लिँङ्गे झलादिबहुवचने एत्वविधायकं सूत्रमस्ति—**

क. बहुवचने झल्येत्

ख. ओसि च

ग. ङेर्यः

घ. अतो भिस् ऐस्

**११. 'ह्रस्वनद्यापो नुँट्' इति सूत्र विषये इदं कथनमसङ्गतमस्ति –**

क. नदीसंज्ञकात् परस्य आमो नुँडागमो भवति।

ख. आबन्त-अङ्गात् परस्य आमो नुँडागमो भवति।

ग. ह्रस्वान्त-अङ्गस्य नुँडागमो भवति आमि परे।

घ. ह्रस्वान्त-अङ्गात् परे आमो नुँडागमो भवति।

**१२. एतेषु दीर्घविधायकसूत्रं नास्ति –**

क. प्रथमयोः पूर्वसवर्णः

ख. पदान्तस्य

ग. नामि

घ. सुपि च

**१३.'रामाणाम्' इत्यत्र दीर्घः केन सूत्रेण भवति?**

क. नादिचि

ख. प्रथमयोः पूर्वसवर्ण

ग. नामि

घ. अकः सवर्णे दीर्घः

**१४. आदेशप्रत्ययो इति सूत्रविषये इदं कथनम् असङ्गतं वर्त्तते –**

क. अनेन षकारादेशो भवति।

ख. अनेन अकारात् परेऽपि षकारो भवति।

ग. इण्कुभ्यां परस्य इदं प्रवर्त्तते।

घ. अपदान्तादेशस्य अथवा प्रत्ययावयवस्य सस्य विषये इदं प्रवर्तते।

**१५.अधोलिखितेषु अयं शब्दः सर्वादिगणे नास्ति-**

क. अन्यः

ख. उत्तरः

ग. युष्मद्

घ. त्रि

**१७.सर्वादिगणे इदं विभक्त्यादेशविधानम् असमीचीनम्-**

क. ङे-य

ख. ङि-स्मिन्

ग. जस्-शी

घ. ङसि-स्मात्

**१७. 'आमि सर्वनाम्नः सुँट्' इति सूत्रविषये इदमेव कथनं पूर्णतया समीचीनमस्ति?**

क. अवर्णान्तात्परस्य बहुवचने आमि सुँडागमः।

ख. सर्वनामशब्दात् परस्य आमः सुडागमः।

ग. अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुँडागमः।

घ. अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामोऽसुँडागमः।

**१८. एतेषु इदं रूपम् अशुद्धं वर्त्तते –**

क. उभौ
ख. उभयान्
ग. उभयेषु
घ. उभयाभ्याम्

**१९.'समः' इति शब्दस्य कस्मिन्नर्थे सर्वनामसंज्ञा भवति?**

क. तुल्यार्थे
ख. अखण्डार्थे
ग. सर्वार्थे
घ. ईषदर्थे

**२०.पूर्वशब्दस्य इदं रूपमशुद्धम्—**

क. पूर्वस्मै,पूर्वाय
ख. पूर्वे,पूर्वाः
ग. पूर्वस्मिन्,पूर्वे
घ. पूर्वस्मात्,पूर्वात्

**२१.स्व इति शब्दस्य कस्मिन्नर्थे सर्वनामसंज्ञा—**

क. आत्मीयार्थे
ख. धनार्थे
ग. ज्ञात्यर्थे
घ. अर्धार्थे

**२२.पूर्वादि-नवसु शब्देषु अयं नास्ति –**

क. अन्तरः
ख. नेमः
ग. अधरः
घ. स्वः

**२३.एषु कानि रूपाणि अशुद्धानि?**

क. जस्— प्रथमे प्रथमाः
ख. ङे— द्वितीयस्मै द्वितीयाय
ग. जस्— द्वितये द्वितयाः
घ. ङि— प्रथमस्मिन् प्रथमे

**२४.निर्जरशब्दस्य जस् विभक्तौ शुद्धं युग्ममस्ति—**

क. निर्जरसः,निर्जराः
ख. निर्जरे,निर्जराः
ग. निर्जरसः,निर्जरे
घ. निर्जरसे,निर्जरा

**२५.जराया जरसन्यतरस्याम् इति सूत्रविषये इदं कथम् असमीचीनं वर्त्तते—**

क. अजादौ विभक्तौ परे इदं सूत्रं प्रवर्तते।
ख. हलादौ विभक्तौ परे इदं न प्रवर्तते।
ग. जरा शब्दस्य जरसादेशो भवति।
घ. निर्जरशब्दस्य जरसादेशो भवति।

**उत्तराणि— १-घ २- ग ३- क ४- ग ५- घ ६- ख ७- ख ८-क ९- घ १०-क ११-ग १२- ख १३-ग १४- ख १५-घ १६- क १७- ग १८- घ १९- ग २०-क २१-क २२- ख २३- घ २४- क २५-घ ।**

# अजन्तपुँल्लिङ्गप्रकरणस्य प्रश्नाः (विश्वपाशब्दात् समाप्तिं यावत्)

**०१. 'दीर्घाज्जसि च' इति सूत्रं कस्यापवादः ?**

क. अकः सवर्णे दीर्घः

ख. जसि च

ग. प्रथमयोः पूर्वसवर्णः

घ. ह्रस्वनद्यापो नुँट्

**०२. 'सुँडनपुंसकस्य' इति सूत्रविषये इदं कथनमसमीचीनम्—**

क. अनेन सूत्रेण सर्वनामस्थानसञ्ज्ञा भवति ।

ख. अनेन नपुंसकलिङ्गे सर्वनामस्थान सञ्ज्ञा न भवति ।

ग. स्वादिपञ्चवचनानि सर्वनामस्थानसञ्ज्ञकानि भवन्ति ।

घ. अनेन 'अम्' विभक्तेः सर्वनामस्थान सञ्ज्ञा न भवति।

**०३.भ-पदसञ्ज्ञाप्रसङ्गे इदं कथनं समीचीनं वर्त्तते –**

क. सुँ इत्यारभ्य कप्-प्रत्ययावधिषु परत्वादनवकाशत्वाद्वा भसंज्ञैव पूर्वोत्तरपदयोः भवति।

ख. सुँ इत्यारभ्य कप्-प्रत्ययावधिषु यकारादि-अजादि-प्रत्ययपरेषु पूर्वस्य परत्वादनवकाशत्वाद्वा भसंज्ञा, अन्यत्र पदसंज्ञा भवति ।

ग. आकडारादेका संज्ञा इति सूत्रेण निर्णीतं भवति यत् भ-पदसंज्ञयोः युगपत् समावेशः कर्त्तुं शक्यते ।

घ. सर्वाणि कथनानि शुद्धानि सन्ति ।

**०४. विश्वपा+शस् अत्र समीचीना प्रक्रिया अस्ति –**

क. अङ्गसंज्ञा,भसंज्ञा,सर्वणदीर्घः,रुत्वविसर्गो=विश्वपाः

ख. पदसंज्ञा अङ्गसंज्ञा,प्रथमयोः पूर्वसर्वणः सकारविसर्गः=विश्वपाः

ग. आकारलोपः, ह्रस्वादेशः रुत्वविसर्गो=विश्वपः

घ. भसंज्ञा, अङ्गसंज्ञा आकारलोपः रुत्वविसर्गः=विश्वपः

**०५. घिसंज्ञा-प्रयुक्तकार्याणि कुत्र भवन्ति ?**

क. जस्,शस्,टा,ङि

ख. टा,ङे,ङसिँ,ङस्, ङि

ग. ङि, ओस् ,ङसिँ, ङस्

घ. आम्,भ्याम्, भ्यस् ,औ

**०६. 'हरेः' इति रूपं कस्यां विभक्तौ भवति ?**

क. केवलं पञ्चम्याम् एकवचने

ख. केवलं षष्ठ्याम् एकवचने

ग. पञ्चम्यां षष्ठ्याञ्च एकवचने

घ. सप्तम्यां पञ्चम्यां षष्ठ्याञ्च एकवचने

**०७. सखिशब्दस्य एकवचने रूपमस्ति-**

क. सखिः

ख. सखा

ग. सखी

घ. सखाः

**०८. 'सखन्' अत्र उपधासंज्ञा वर्त्तते –**

क. नकारस्य

ख. सकारस्य

ग. सकारोत्तर-अकारस्य

घ. खकारोत्तर-अकारस्य

**०९.'हल्ङ्याभ्यो दीर्घात्सुँतिस्यपृक्तं हल्' इति सूत्रविषये इदं कथनमसङ्गतं वर्त्तते –**

क. अनेन हलन्तात् परं सुँ-ति-सि-सम्बन्धी अपृक्तहल्लुप्यते ।

ख. दीर्घात् परं सुँ-ति-सि- सम्बन्धी अपृक्तहल्लुप्यते ।

ग. दीर्घङ्यन्ताद्-आबन्ताच्च परे सुँ- सम्बन्धी अपृक्तहल्लुप्यते ।

घ. सर्वाणि कथनानि असङ्गतानि सन्ति।

**१०.'सखायौ' अत्र वृद्धिः केन सूत्रेण भवति ?**

क. अचो ञ्णिति

ख. वृद्धिरेचि

ग. प्रथमयोः पूर्वसवर्णः

घ. आटश्च

**११.पतिशब्दस्य तृतीयैकवचने किं रूपम् ?**

क. पतिना

ख. पत्या

ग. पत्रा

घ. पतेन

**१२.'कति'शब्दस्य इदं रूपं शुद्धमस्ति –**

क. कतिः

ख. कती

ग. कति

घ. कतयः

**१३.त्रिशब्दस्य पुँल्लिङ्गे षष्ठ्यां रूपं भवति –**

क. त्रिणाम्

ख. त्रीणाम्

ग. त्रयाणाम्

घ. त्रयीणाम्

**१४. त्यदादिगणः कस्य गणस्यान्तर्गतोऽस्ति –**

क. शकन्ध्वादिगणस्य

ख. अजादिगणस्य

ग. भ्वादिगणस्य

घ. सर्वादिगणस्य

**१५. पपी इति विषये इदं कथनम् असमीचीनं वर्त्तते –**

क. पपी-शब्दस्यार्थः सूर्यो भवति।

ख. पपी+औ अत्र 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घो भवति।

ग. पप्याम् अत्र दीर्घत्वात् नुँट् न भवति।

घ. पपी इति रूपं सप्तमी विभक्तौ सिद्धं भवति।

१६. नदी-संज्ञाविषये इदमेव कथनं पूर्णतया सुष्ठु अस्ति –

क. इकारान्त-ऊकारान्तौ स्त्रीलिङ्गशब्दौ नदीसंज्ञकौ स्तः।

ख. ईकारान्त- ऊकारान्तौ पुँल्लिङ्गशब्दावपि नदीसंज्ञकौ स्तः।

ग. ईदूदन्तौ-नित्यस्त्रीलिङ्गशब्दौ नदीसंज्ञकौ स्तः।

घ. ईदूदन्तौ-नित्यस्त्रीलिङ्गशब्दौ समासादिवृत्त्या लिङ्गान्यस्य बोधकौ स्तश्चेत् नदीसंज्ञा न भवति।

**१७.'बहुश्रेयस्यै' इत्यस्य समीचीना प्रक्रियास्ति –**

क. बहुश्रेयसी+ङे— आट्,वृद्धिः ,यणादेशः।

ख. बहुश्रेयसी+ङि— वृद्धिः यणादेशः।

ग. बहुश्रेयसी+औ— यणादेशः।

घ. बहुश्रेयसी+ङे— आट् यणादेशः।

**१८. 'अचिश्नुधातुभ्रुवां य्वोरियँङुवँङौ' इति सूत्रविषये इदं कथनम् असमीचीनम् –**

क. अनेन सूत्रेण धातोः इकारस्य— इयङ्, उकारस्य— उवङ् भवति।

ख. अत्र सूत्रे इकार-उकारौ धातुसम्बन्धिनौ स्तः।

ग. इदं सूत्रमजादौ प्रत्यये परे प्रवर्त्तते।

घ. इदं सूत्रम् 'एरनेकाचोऽसंयोगपूर्वस्या'पि अपवादो वर्त्तते।

**१९.'सुश्रियौ' इत्यत्र 'एरनेकाचोऽसंयोगपूर्वस्य' इति सूत्रं कुतो न प्रवर्त्तते –**

क. अनेकाच्त्वाभावात्

ख. 'श्री' इति धात्वभावात्

ग. इकारान्ताभावात्

घ. असंयोगस्याभावात्

**२०. क्रोष्टा इत्यस्य समीचीना प्रक्रिया अस्ति –**

क. तृज्वद्भावः,गुणः ,दीर्घः,नलोपः,स-लोपः

ख. तृज्वद्भावः,अनँङ्,दीर्घः सलोपः ,नलोपः ।

ग. अनँङ् ,णिद्वद्भावः,वृद्धिः,सकारलोपः ।

घ. दीर्घः,तृज्वद्भावः,सलोपः क्रोष्टा इति सिद्धम् ।

**२१. क्रोष्टुशब्दस्य पञ्चम्यैकवचने रूपाणि भवन्ति –**

क. क्रोष्टुः क्रोष्टोः

ख. क्रोष्टुः क्रोष्ट्रोः

ग. क्रोष्टुः क्रोष्टो

घ. क्रोष्टुवो क्रोष्टः

**२२. अधोलिखितेषु अशुद्धं कथनमस्ति –**

क. 'खलपू' इत्यत्र यणादेशो भवति ।

ख. 'सुधी' इत्यत्र यणादेशो न भवति ।

ग. 'स्वभू' इत्यत्र यणादेशो न भवति।

घ. 'वर्षाभू' इत्यत्र  यणादेशो न भवति।

**२३. 'धातृ' इति शब्दस्य विषये इदं कथनमशुद्धम् –**

क. अस्यार्थो ब्रह्मास्ति ।

ख. धातृशब्दस्य सर्वाणि रूपाणि क्रोष्टुशब्दवद् भवन्ति ।

ग. षष्ठीबहुवचनेऽस्य रूपं 'धातॄणाम्' इति भवति ।

घ. प्रथमाविभक्तौ-धाता, धातारौ, धातारः रूपाणि भवन्ति ।

**२४. गो शब्दस्य इदं रूपम् अशुद्धमस्ति –**

क. गौः

ख. गाम्

ग. गोः

घ. गान्

**२५.राः इति कस्य शब्दस्य रूपम् –**

क. ‘रा’ शब्दस्य

ख. ‘रै’ शब्दस्य

ग. ‘रौ’ शब्दस्य

घ. ‘रू’ शब्दस्य

**उत्तराणि— १-ग २- घ ३- ख ४- घ ५- ख ६- ग ७- ख ८-घ ९- ख १०-क ११-ख १२- ग १३-ग १४- घ १५-ख १६- ग १७- क १८- घ १९- घ २०-ख २१-क २२- घ २३- ख २४- घ २५-ख ।**